कर्मशब्देन गोत्रमेव तद्ग्रमेव योनिविशेषाश्चतुरशीतिलक्षाः तदन्तरैः कृतविभागम् ॥ १०१ ॥ देशादीनां समृद्धिपर्यन्तानां विषमतां विलोक्य भवसंसरणे ॥ १०२ ॥ अनादृतगुणदोष एवंविधो जीवः पञ्चेन्द्रियाणां निजनिजविषयगाद्धर्यं तेन विवशो गतशुभपरिणामः रागद्वेषोदयनिर्यन्त्रितः ॥ १०३ ॥ घटितव्यं चेष्टितव्यम् ॥ १०४ ॥ तत्कथं चेष्टितव्यमित्याह—अनिष्टविषयाभिकाङ्क्षिणा भोगिना भोगासक्तेन सह वियोगो विषयाणां कथं स्यात् । वै इति प्रश्ने । आगमोऽभ्यसनीयः । अतिगाढं व्यग्रहृदयेनापि यथावद्विजायैतानपायबहुलानागमोऽभ्यसनीयः ॥ १०५ ॥ औत्सुक्यकारकाः प्रकटोल्बणस्नेहरागाः निरूपे प्रान्ते बीभत्सादिभिर्बहुलाः ॥ १०६ ॥ दुःखान्ताः ॥ १०७ ॥ शाकोऽष्टादशो यत्र तीमन मोदकाम्लकरसादि परिणतिसमये ॥ १०८ ॥ उपचारश्चाटुकर्मविनयप्रतिपत्तिः शयनादिः संभूपविंडितरम्यकानि रतिकराणि अविच्छेदकारिणः ॥ १०९ ॥ देवनारकाणां नियतकालं, अनियतकालं मनुष्यतिरश्चाम् ॥ ११० ॥ इष्टपरिणामाः सन्तोऽनिष्टपरिणामाः, अनिष्टपरिणामाः सन्तोऽभीष्टपरिणामाः । आलोचनीयः सर्वक्षेत्रावस्थाभावित्वात् । एवं चानवस्थितपरिणामविषयविरतौ अनुग्रहो गुणयोगतः, उपलक्षणत्वाद्बहुगुणः, चित्तप्रसन्नता ॥ १११ ॥ इत्थं गुणान् दोषरूपेण दोषांश्च गुणरूपेण यः पश्यति गुणदोषविपरीतोऽलब्धि प्रथमांग विलोक्य परिरक्ष्यः ॥ ११२ ॥ विधिना विशेयः ॥ ११३ ॥ शस्त्रपरिज्ञा नाम आद्याध्ययनार्थं सङ्क्षेपेणाह—मातापित्रादिः गौरवाणां ऋध्द्यादीनां षड्जीवकाययतना प्रथमेऽध्ययने गौरवः त्यागो द्वितीये द्वाविंशतिपरिषहविजयस्तृतीये दृढसम्यक्त्वं चतुर्थे ॥ ११४ ॥ संसारोद्वेगः पञ्चमे, कर्मनिर्जरोपायः षष्ठे, वैयावृत्त्योद्यमः सप्तमे, तपोविधिरष्टमे, योषितां त्यागः स्त्रीपरिहारो नवमे ॥ ११५ ॥ अंबरं वस्त्रं, भाजनं पात्रकादि तयोरेषणा तथावग्रहा देवेन्द्रादेः एते कीदृशाः शुद्धाः शुद्धिमन्तः ॥ ११६ ॥ स्थानं कायोत्सर्गरूपं, निषद्या स्वाध्यायभूमिः, त्यागः शब्दरूपयोरत्यागः क्रियाशब्दः सर्वत्र परक्रियानिषेधः, प्रयत्नतस्तपस्यतो निःप्रतिकर्मणः परो यदुपकरोति संस्करोति तदयुक्तं, अन्योऽन्यक्रिया सापि निष्प्रतिकर्मवपुषो न युज्यते ॥ ११७ ॥ साध्वाचारः पूर्वोक्ताध्ययनकथितस्वरूपः खलु निश्चयेन अयं प्रत्यक्षः ॥ ११८ ॥ भावना वासनाभ्यासः षड्जीवनिकाययतनादिका तदाचरणेन च गुप्तहृदयस्य च मूलोत्तरगुणैर्गुप्तमनस्कतदनुष्ठानव्यग्रस्य । किं भवतीत्याह—न तदस्ति कालविवरं यत्र कालच्छिद्रेऽभिभूयते प्रमादकषायविकथादिभिः ॥ ११९ ॥ स्वल्पकालेनैव विपरिणामधर्माः कुत्सितपरिणामधर्मा अन्यथाभवनस्वभावाः, मर्त्या मरणधर्मिणो मनुष्यास्तेषां ऋद्धिसमुदया धनधान्यहिरण्यस्वर्णादिविभूतिसमूहा अनित्याः संयोगाः पुत्रपत्नीप्रभृतिसंबन्धाः विप्रयोगावसानाः शोकोत्पादका भवन्ति, ततो न किंचिद्विषयाभिलाषेण ॥ १२१ ॥ भोगजनितसुखैः क्षणविनश्वरैः प्रभूतभीतिभृतैः कांक्षितैरभिलषितैः शब्दादिविषयाधीनैः किं ? न किंचित्प्रयोजनमेभिः । तस्मात्तेष्वभिलाषमपहाय नित्यमात्यन्तिकं, अभयमविद्यमानभीतिकं, आत्मस्थं स्वायत्तं प्रशमसुखं मध्यस्थस्यारक्तद्विष्टस्योपशान्तकषायस्य यच्छर्म तदेवविधं तत्रोद्यतो भव ॥ १२२ ॥ इन्द्रियग्रामस्य शब्दादिविषयस्य लब्धुमिच्छतः प्रिये कर्तव्ये यावत्प्रयासः क्रियते तावत्तस्यैवाक्षसमूहस्य निग्रहे वरतरं बहुगुणं ऋजुचित्तेन उद्यमः कृतः ॥ १२३ ॥ सरागेण मोहयुक्तेन विषयाभिलाषतः प्राप्य सुखं तस्मादनन्तकोटिगुणितं मूल्यं विनाऽनायासेन वीतरागः प्रशमसुखमाप्नोति ॥ १२४ ॥ इष्टस्या ( ष्टा ) वियोगकांक्षानिष्टविप्रयोगकांक्षोत्पन्नं दुःखं सरागः प्राप्नोति, न वीतरागः ॥ १२५ ॥

एतेषु हास्यादि भेदेषु निभृतः स्वस्थस्तस्य यत्सुखं, तद्रागिणा कुतः ॥ १२६ ॥ एवगुणयुक्तोऽपि केवलमनुपशान्तोऽशमितविषयकषायः तं गुणं निरुत्सुकत्वं रत्नत्रय्युपचयरूपं नाप्नोति ॥ १२७ ॥ १ ना पुरुषः चक्रवर्तिवासुदेवादिस्तस्य महेन्द्रस्य च तादृशं सुखं नास्ति यादृशं प्रशमस्थितस्य ॥ १२८ ॥ स्वजनपरजनविषयां चिन्तां दारिद्र्यधनाढ्यदौर्भाग्यसौभाग्यादिरूपां विहाय । आत्मपरिज्ञानमनादौ संसारे परिभ्रमन्नयमात्मा सुखदुःखान्यनुभवन्नपि न तृप्तः, सोऽधुना कथमेभिस्तृप्तो भवेत्तदधुना यथा संसारे बहुसंकटेऽयं न भ्रमति तथा प्रयत्नो मया कार्य इत्यात्मज्ञानचिन्तनं एषाभिरतः परकार्यविमुखो जितमदनादिसर्वदोषः सुखमास्ते स्वस्थ उपद्रवरहितस्तिष्ठति । निर्जरः निर्गताऽपेता जरा हानिः सा च प्रस्तावात्प्रशमामृतस्य यस्यासौ निर्जरः ॥ १२९ ॥ १ निर्जर इति वा कृषिवाणिज्यादिचिन्तनं

लोकवार्ता धर्मनिर्वाहपृच्छा शरीरनिर्वाहचिन्तनं शोभनक्षान्त्यादिसद्धर्मचरणवार्तार्थः एतद्द्वयममीष्टं लोकवार्ता-तच्छरीरवार्तायाः कारणम् ॥ १३० ॥ आधार आश्रयो वर्तते इति शेषः धर्मचारिणा संयमिना लोके जातमृतसूतक-निराकृतगृहगमनादि मधुमांसादि च धर्मविरुद्धम् ॥ १३१ ॥ देहः शरीर नैव अन्नपानवसनादिभिर्विना यापयितुं शक्यः तान्यन्नपानवसनादिसाधनानि सद्धर्मस्य क्षमादेरविरोधाद्धर्मविरुद्धत्यागेनानुवर्तनीयः ॥ १३२ ॥ दोषेणानुग-कारी भवति प्रत्युतापकारेण प्रवर्तने परो लोकः क्रुध्यति आत्मना ॥ १३३ ॥ पिंडैषणाध्ययनभणितो निश्चयेन कल्प्यो ग्राह्योऽकल्प्यः परिहार्यः आगमे आदानासेवनयोर्नियतवृत्तेः तेन विधिगृहीताहारेण ॥ १३४ ॥ व्रणे गंडे लेपः अक्षस्य धुरा सैवोपांग अभ्यवहरेदित्यत्रापि योज्यमसंगा मनोवाक्कायेष्वसंगाः साधवस्तेषां योग्य: क्रियानुष्ठानं तेषा भरः संघातः, स एव तन्मात्रं, तस्य यात्रा निर्वाहस्तदर्थं धर्मानुष्ठाननिर्वाहार्थमित्यर्थः। पन्नगो यथा चर्वणवर्जितमेव गिलति एव साधुरपि चिलातिपुत्रमारितधनश्रेष्ठिसुतामांसास्वादकपितृपुत्रादिवद्वा, यथा तैः शरीरस्य धारणार्थमेव तत्कृत तथा साधुरपि ॥ १३५ ॥ विशिष्टरसास्वाद अगृद्धचित्तेन साधुनेति प्रक्रमः तद्विपरीतमविद्यमानास्वादमपि द्वेषरहितेन वृको यथा सरसं विरस वा न विलोकयति, तद्वत्साधुनापि दारुप-मधृतिना दारुतुल्यसमाधिना आस्वाद्य वस्तु स्वाद्यं क्रिया ॥ १३६ ॥ कालमुष्णकालादि स्निग्धेतरादि च क्षेत्र सुभिक्षादिकं च । मात्रामल्पादिरूप सात्म्यं यद्यस्योपभुक्तं परिणतिमेति द्रव्याणा घृतगुडादीनां गुरुत्व लघुत्व। यद्वा येन द्रव्येणोपभुक्तेन गुणाना गौरवं शेषाणा लाघव चात्मनः स्यात् । भोज्य वस्तु ॥ १३७ ॥ अन्यदौपग्रहिकं दंडकादि उत्सर्गतः कल्प्यं कल्पनीयं, अपवादतो गाढालम्बनेन अकल्प्यमपि ग्राह्यं लघुतरदोषासेवनं सद्धर्मदेहरक्षानिमित्तं कारणं तेनोक्तम् ॥ १३८ ॥ कल्प्याकल्प्यशुद्धाशुद्धविधिज्ञः, संविग्ना ज्ञानक्रियायुक्ताः सहाया यस्य स्वभावविनीतः दूषणदूषितेऽपि रागादिरहितः ॥ १३९ ॥ धर्मोपकरणेन वस्त्रपात्रादिना धृत वपुरस्य अलेपको लोभेन न स्पृश्यते ॥ १४० ॥ अकृतगार्ध्यः धर्मोपकरणयुक्तोऽपि न स्नेहमुपगच्छति निर्ग्रंथो वक्ष्यमाणपरिग्रहरहित इति ॥ १४१ ॥ ग्रन्थोऽष्टविधं कर्म सम्यक्त्वाद्विपरीत प्राणातिपातादिभ्योऽनिवृत्तिः अशुभमनोवाक्कायाः अशठ मायारहित सम्यगुपगच्छति ॥ १४२ ॥ सव्यंजनमुपष्टम्भ वा व्यवहारे व्यापाररूपे, ज्ञानादीनामनुग्रहकारि, दोषाणा निग्रहकारि, यद्वस्तु तन्निश्चये कल्पनीय, नावशिष्टम् ॥ १४३ ॥ यद्वस्तु अन्नपानादि, दर्शनज्ञानाचाराहोरात्रा-भ्यन्तरानुष्ठेयव्यापाराणा विनाशकारि, यच्च प्रवचनकुत्साकारि मद्यमांसकन्दमूलाभोज्यगृहभिक्षाग्रहणादि तत्सर्वं कल्प्यमप्यकल्प्यम् ॥ १४४ ॥ कल्प्याकल्प्यत्वं शुद्धवस्तुष्वप्यनियतं, पुरुषाद्यपेक्षयेति शेषः, यथा विकारभाजा शुद्धमपि क्षीरादि निषिध्यते. नेतरेषा, नीरुजा भेषजं तदन्येषां कल्प्यतेऽशुद्धमपि ॥ १४५ ॥ देशोऽसाधुपरिचितक्षेत्रं, कालो दुर्भिक्षादिः, पुरुषः प्रव्रजितराजादिः, अवस्था मान्द्यादिका, एतेषामर्थेऽकल्प्यमपि कल्प्यं, उपयोगशुद्धि-परिणामान् नैवैकान्तेन कल्प्यते कल्प्यं नैवैकान्तेन न कल्प्यतेऽकल्प्यम् ॥ १४६ ॥ यतिना साधुना तदेव चिन्तनीयं भाषणीयं कायेन कर्तव्यं, यदात्मनः परेषा उभयेषां बाधक न भवति. अतीतादिसर्वकाले ॥ १४७ ॥ सर्वेषु शब्दादिसर्वेन्द्रियार्थेषु श्रोत्रादीन्द्रियगणस्य गोचरता प्राप्तेषु वैराग्यमार्गः सज्ज्ञानक्रियासेवन तस्मिन्नन्तरायका-रिषु परिसंख्यानमित्वरत्वनिःसारत्वाहितकारित्वपरिज्ञानं कार्यं ध्येयम्। केन पर कामार्थधर्मेषु प्रधानं नियतं शाश्वतं कार्यं मोक्षप्राप्तिलक्षणमिच्छताऽभिलाषिणा ॥ १४८ ॥ भावयितव्यमहर्निशं चिन्तनीयमभ्यसनीयं किं तदनित्यत्व, संसारे सर्वस्थानानामशाश्वतत्व । अशरणत्व जन्मजरामरणाभिभूतस्य नास्ति किंचिच्छरणं । एकत्वमेक एवाहं । अन्यत्वं स्वजनधनदेहादिभ्योऽन्य एवाह । अशुचित्वमाद्युत्तरकारणाशुचितामयस्य शरीरस्याशुचिभावादशुचित्वं । संसार इति माता भूत्वा भगिनीत्यादिभवभावना । आश्रवद्वाराणि विवृतानि कर्माश्रवः । आश्रवद्वारपिधानं संवरः ॥ १४९ ॥ कर्मणां क्षपणोपायो निर्जरण, लोकायामादिलोकविस्तरः शोभनोऽय धर्मस्तत्त्वतः परमार्थतश्चिन्ता धर्म-स्वाख्याततत्त्वचिन्ताः बोधेः सुदुर्लभत्व चेति प्रकटम् ॥ १५० ॥

इष्टजनसम्प्रयोगश्च ऋद्धिसंपच्च विषयसुखसंपच्च सपच्छब्दः प्रत्येकं योज्यः ॥ १५१ ॥ अभिद्रुतेऽभिभूते ॥ १५२ ॥ आकालिकहितं सदा भाविशुभाचरणं, एकेनैवात्मनाऽसहायेन स्वस्यार्थे ॥ १५३ ॥ स्वजनात् पित्रादेः, परिजनाद्दासादेः, विभवात्कनकादेः, शरीराद्देहाच्च, तेभ्यो भिन्नोऽहं, पृथक्कर्मणि यस्य नियता नक्तंदिनमालोचिका, हिर्यस्मात्, शोककलिः कलिकालस्वरूपम् ॥ १५४ ॥ कर्पूरादीना वपुःसंपर्कादशुचिकरणसामर्थ्यात् । शुक्रशोणिताद्याद्यकारणानामन्नपानाद्युत्तरकारणानामशुचित्वात् ॥ १५५ ॥ संसारभावनामाह—दुहिता सुता ॥ १५६ ॥ स सम्यग्दृष्टिरपि न विरतः प्राणातिपातात् सोऽपि, प्रमादवान् । मनोदंडाः ४ वाग्दंडाः ४ कायदंडाः ४ । तदेव पञ्चदशप्रकारदंडरुचिः ततश्चायमर्थः प्रमादवान् यो जीवस्तस्य यथैते भेदा बहवस्तथाश्रवकर्माणि आश्रवस्थानानि भवन्तीति । आश्रवविधिरुक्तस्तस्मिन्नाश्रवकर्मणि विषये तेषां भेदानां निग्रहे यतेत ॥ १५७ ॥ अनुपादाने वृत्तिर्व्यापारः । पाठान्तरे गुप्तिर्गोपनं । आत्मन्यारोपितहितः । वरदैस्तीर्थकरादिभिः ॥ १५८ ॥ विशोषणाल्लंघनात् । उपचितोऽपि पुष्टोऽपि । दोषोऽजीर्णात्मकः । तत्कर्मोपचितं बन्धादिभिः निरुद्धाश्रवद्वारो जीवः संवृत. ॥ १५९ ॥ सर्वत्र यत्र न जातं न मृतं मयेति । परमाणुप्रभृतीन्यनन्तानन्तस्कन्धपर्यवसानानि द्रव्याणि । तेषां मनोवाक्कायादिभिरुपयोगाः । न च तैस्तृप्त इति चिन्तयेत् ॥ १६० ॥ सुष्ठु निर्दोष. ख्यातः क्षमादिलक्षणधर्मे सुखपरम्परया ॥ १६१ ॥ कल्पता नीरोगता । आयुर्दीर्घायुष्क । श्रद्धा धर्मजिज्ञासा । कथकश्चाचार्यः । श्रवणं प्वाकर्णनं । एतेषु नवसु उत्तरोत्तरदुर्लभेषु सत्स्वपि । बोधिः सद्धर्मस्याख्याता । सम्यग्दर्शन सम्यग्लाभो भवति ॥ १६२ ॥ अवाप्य अज्ञानात् रागात् पत्नीपुत्राद्यासक्तेः कापथविलोकनात् कुपथदर्शनात् एकैकनयानुसारिजिनप्रणीतागमवचनैकदेशस्वयुक्तिनिरपेक्षविचारणाद्बहवो निह्नवा जज्ञिरे गौरववशात् ॥ १६३ ॥ रागप्रहाणमार्गो दुःखेनाधिगम्यः इन्द्रियादिसंपत्नः वैरिविह्वलेन विरागमार्गप्राप्तौ विजयस्तेन प्राप्तो भवति, येन सर्वविरतिरवाप्नोति ॥ १६४ ॥ गणशब्दः प्रत्येकमभिसंबध्यते, नेतारः तान् कषायान् पूर्वं हत सैन्यमनायकमिति न्यायात् ॥ १६५ ॥ संचिन्त्यालोच्य उदयनिमित्त प्रादुर्भावकारण उपशान्तेर्हेतुः कारणं च कषायाणामुदयनिमित्त परिहार्यमुपशान्तिहेतुरासेवनीयः, कथं त्रिकरणशुद्धं कायवाङ्मनोनिर्दोषं, अपिरभ्युच्चये ॥ इति भावनाधिकारः ॥ १६६ ॥ शौचं संयमं प्रति निर्लेपता अदत्तादानापरिग्रहो वा । चः समुच्चये । संयमः सप्तदशभेद' । त्यागो द्रव्यभावग्रन्थत्यजनम् ॥ १६७ ॥ क्षमाप्रधानः ॥ १६८ ॥ गुर्वभ्युत्थानाद्यधीना गुणा ज्ञानादय. । यस्मिन् पुरुषे ॥ १६९ ॥ यथाचेष्टितं तथाख्याति । तस्य च शुद्धिर्नास्ति ॥ १७० ॥ द्रव्य सचेतनादि शैक्षादि सचेतनादि—"अट्ठारस पुरिसेसु वीस इत्थीसु दस नपुंसेसु । पव्वावणाअणरिहा अणहा पुण इत्थिआ चेव त्ति ( अहवा विगलंगरूवाइति ) ॥ १ ॥" उपकरोति ज्ञानादीनां तदप्युद्गमादिशुद्ध शुचि । तथा भक्तपानादि तदुद्गमादिदोषरहित शुचि । अन्यदशुचि । देहशुचि पुरीषाद्युत्सर्गपूर्वकं निर्लेप निर्गन्ध देहमविकृत्य प्रवृत्त । भावशौच निर्लोभमनाविधायि कार्यं कर्तव्यम् ॥ १७१ ॥ १ स्त्रीनपुंसकं वाश्रित्यैष पुनर्निषेधस्तदत्यन्तप्रतिषेधाय । आश्रवा' प्राणातिपातादयः कर्मादानहेतवस्तेभ्यो विरतीकरण, पञ्चेन्द्रियाणि स्पर्शनादीनि तेषां निरोध' । कषायाः क्रोधादयश्चत्वारस्तेषामुदयनिरोध' । दंडा मनोवाक्कायाख्याः, अभिद्रोहाभिमानेर्ष्यादिकरण मनोदंडः, हिंस्रपुरुषानृतादिभाषणं वाग्दंडः, धावनवल्गनप्लवनादिरूपः कायदंड. । एभ्यो निवृत्तिरेव संयमः । सप्तदश भेदा भवन्ति ॥ १७२ ॥ बान्धवा' स्वजनाः, धन हिरण्यादि, पञ्चेन्द्रियविषयसुख, एतेषां त्यागात् । भयमिहलोकादि सप्तविध, विग्रह. शरीर प्रतिकर्मणा त्यागात्साधुर्मुनि त्यक्तात्मा परिहृतासंयमपरिणाम अष्टविधग्रन्थविजयप्रवृत्त. परिहृताभिमानममत्वभावोऽरक्तद्विष्टस्त्यागी ॥ १७३ ॥ न विसंवादनं यथादृष्टवस्तुभाषणं तेन योगः संबन्धः त्रिविधेन योगेन अजिह्मताऽकौटिल्यं, कायेनान्यवेषधारितया विप्रतारयति, मनसाऽसत्य प्रागालोच्य भाषते करोति वा, वचनेन सद्भूतनिह्नवासद्भूतोद्भावनं कटुकसावद्यादिभाषण । एतत्परिहाराच्चतुर्विध सत्य जिनेन्द्रवचने न त्वन्यत्र ॥१७४॥ अनशनं चतुर्थभक्तादि षण्मासान्त तपः । तथा भक्तप्रत्याख्यानेंगितमरणपादपोपगमनादि । ऊनोदरता द्वात्रिंशत्कवलेभ्यो यथाशक्ति यदाहारमूनयति । वृत्तिर्वर्तनं भिक्षा ,तस्याः संक्षेपणं दत्तिभिर्भिक्षाभिश्च परिमितग्रहणं । रसत्यागः

क्षीरदध्यादिविकृतीना यथाशक्तिपरिहारः। कायक्लेशः कायोत्सर्गोत्कटुकासनातापनादिः। संलीनः सिद्धान्तोपदेशेन इन्द्रियनोइन्द्रियमेदेन तद्भावस्तत्ता। इन्द्रियसंलीनः संहृतेन्द्रियव्यापारः कूर्मवत्। नोइन्द्रियसंलीनो निःकषायमार्तरौद्ररहित मनो धरन् परोपलक्ष्यं बाह्यं तपः प्रोक्तं जिनादिभिः ॥ १७५ ॥

प्रायश्चित्तमालोचनादिदशविधमतीचारमलप्रक्षालनार्थं। एकाग्रचित्तनिरोधो ध्यानं। तत्रार्तरौद्रे व्युदसनीये, धर्म्यशुक्ले द्वे ध्यातव्ये। व्यापृतो भावो वैयावृत्त्यं आचार्यादीना दशाना भक्तपानवस्त्रादिभिरुपग्रहः शरीरशुश्रूषा चेति। विनीयते येनाष्टविध कर्म स विनयो ज्ञानदर्शनचारित्रोपचारमेदात्। व्युत्सर्गोऽतिरिक्तोपकरणभक्तपानादेरुज्झनं। स्वाध्यायो वाचनादिः पञ्चविधः। अभ्यन्तरस्य मिथ्यादर्शनकषायादेराकरणात्तपोऽपि ॥ १७६ ॥ दिव्यं भवनेशव्यन्तरज्योतिष्कविमानवासिदेवीना संबन्धि तस्मात् मनोवाक्कायैः कृतकारितानुमतिभिः विरतिर्नवभेदा, औदारिक मनुष्यतिर्यक्संबन्धि, तत्रापि मनोवाक्कायैः कृतकारितानुमतिभिश्च विरतिर्नवकं, तदेव ब्रह्माष्टादशभेदं भवति ॥ १७७ ॥ आत्मन्येव व्यापारोऽध्यात्म कथमयमात्मा बध्यते कथं वा मुच्यत इति तद्विदन्तीत्यध्यात्मविदस्ते मूर्छा गार्द्धयं निश्चयनयाभिप्रायेणात्मनः प्रतिविशिष्टपरिणामस्ता परिग्रहशब्दवाच्यतया कथयन्ति। यस्मादेवं तस्माद्वैराग्यमिच्छता आकिंचन्यं परो धर्मः न किंचिन्ममेति विगतमूर्छया स्थेयम् ॥ १७८ ॥ दशप्रकारक्षमादिधर्मस्यानुष्ठायिनस्तदासेविन' सदैवानवरतं शिवोपायसेविनः दृढाना वज्रमेदाना रूढाना चिरकालावस्थितिप्राप्तस्थैर्याणा घनानां बहलाना एवंविधानामपि ॥ १७९ ॥ माया लोभश्च मानः क्रोधश्च उद्धताः सावष्टंभाः प्रवला. प्रकृष्टसामर्थ्याः विनाशयति साधुरिति योगः ॥ १८० ॥ व्यतिकरः संपर्कः, विरक्तता पूर्वमहर्षिसमाचीर्णक्रियाकलापपरता, सद्भावा जीवादयः, एतानि धर्मस्थैर्यजनकानि ॥ १८१ ॥ आक्षिप्यन्ते धर्मे प्रत्यभिमुखाः प्राणिनो यया सा आक्षेपणी। विक्षिप्यन्ते परापरदैवादिदोषकथनेन प्रेर्यन्ते प्राणिनो यत्र सा विक्षेपणी। विमार्गा जैनमार्गादन्ये एकान्तमतावलम्बिनस्तेषां बाधने समर्था पदरचना यस्याः सा। श्रोता चासौ जनश्च तस्य श्रोत्रमनसोस्तयोः प्रसादजननी यथा जननी माता ॥ १८२ ॥ सम्यग्विवेच्यते नरकादिदुःखेभ्यो भय ग्राह्यते यया सा संवेजनी। निर्वेदं कामभोगेभ्यो यया सा एवमेताम् ॥ १८३ ॥ यावत्कालं, अध्यात्मचिन्तापन्नस्य, न तेनापि परदोषगुणकीर्तनव्यापारेण किंचित्प्रयोजन, तावत्कालं व्यग्रं व्यापृतम् ॥ १८४ ॥ आचारादिश्रुतपाठेऽपरेषां पाठने चाद्य मया किं कृतमित्यादि स्वात्मनि संचिन्तने ॥ १८५ ॥ शासु अनुशिष्टौ इति वाग्विधिविद्भिश्चतुर्दशपूर्वधरै.। विशेषेण नियतो निर्णीतः। देङ् त्रेङ् पालनार्थे। सर्वशब्दविदा संस्कृतप्राकृतादिशब्दविज्ञानाम् ॥ १८६ ॥ रागद्वेषव्याप्तचित्तान् शिक्षयति विपरीतमशुभ मा कुरु अनवरतं शुभमविपरीत कुरु इत्यादिना। तथा संत्रायते रक्षति सदाचारे। स्थितानिति शेष। कुतो नरकादिदुःखात् ॥ १८७ ॥ शासनस्य शिक्षणस्य सामर्थ्यं बलिष्ठतानेन संत्राणस्य पालनस्य बलेन च उभयेन सहित यत्तच्छास्त्रमुच्यते सिद्धान्तः ससारभावमनुवदता मोक्षं दर्शयता सर्वविदामेतद्वचनम् ॥ १८८ ॥ बन्धः कर्मोपादान, मोक्षः कर्माभावः ॥ १८९ ॥ एतानि विपरीपुस्तावज्जीवानाह—असंख्येयप्रदेशात्मकाः सकलोपयोगभाजः मुक्ताः सिद्धाः। संसारिणो भवस्था. लक्षणतश्चिह्नत एकेन्द्रियादयो ज्ञातव्या इति लक्षणतोऽसाधारणस्वरूपतः ॥ १९० ॥ एवमनेकप्रकाराणामेकैको विधिरेकैको मेदोऽनन्तकालवर्तित्वादनन्तपर्यायः, अनन्ता पर्याया धर्मा यस्य, अन्तर्मुहूर्तादारभ्यैकैकसमयवृद्ध्या यत्त्रिंशत्सागरोपमाणि यावत् स्थितयः, अगुलासंख्येयभागादारभ्य यावत्समस्तलोकावगाह., ज्ञान वस्तुविशेषावबोधो दर्शन वस्तुसामान्यावबोध., पर्यायास्तारतम्यकृतविशेषाः ॥ १९३ ॥ उपयोगश्चेतनाज्ञानदर्शनव्यापार', साकारो विकल्परूपो ज्ञानोपयोगः, तद्विपरीतो दर्शनोपयोगः द्व्यष्टचतुर्भेद ॥ १९४ ॥ ज्ञान मत्यादि मतिश्रुतावधयो मिथ्यात्वोदयोपरक्तस्वभावा अज्ञानता यान्ति ॥ १९५ ॥ औदयिक., स च जीवोपात्तकर्मणामुदयो देवनारकादिपर्यायकारी, पारिणामिको जीवभव्याभव्यत्वादिरूपस्त्रिकालतदतिरूप, उपशम. कर्मणा विपाकप्रदेशद्वयरूपोदयाभावस्तेन निर्वृत्त औपशमिकः सम्यक्त्वचारित्ररूपः, सम्यक्त्वज्ञानचारित्रादिरूपः क्षयोत्थः ॥ १९६ ॥ गतिर्नरकादि. ४। कषायाः क्रोधादयः ४। लिंगं स्त्रीपुंनपुंसकं ३। मिथ्यात्वं। अज्ञानं, असंयतत्वं, असिद्धत्व, लेश्या. ६, एते कर्मोदयादा

विर्भवन्ति । पारिणामिकौपशमिकौ पूर्वोक्तत्रिविधद्विविधौ भवतः, क्रमेण कर्मोदयनिरपेक्षसापेक्षौ च । कर्मक्षयाज्जातः क्षायिकः स नवविधः सम्यक्त्वचारित्रकेवलज्ञानकेवलदर्शनदानादिपञ्चलब्धिभेदतः । क्षायोपशमिकोऽष्टादशविधः, मत्यादिज्ञानचतुष्कमज्ञानत्रिकं चक्षुरादिदर्शनत्रिकं दानादिपञ्चलब्धयः सम्यक्त्वं चारित्रं देशविरतिश्चेति । षष्ठश्च सान्निपातिकः पूर्वोक्तभावना द्विकादिसंयोगजः स च पञ्चदशभेदो ग्राह्यः अन्य एकादशभेदरूपस्त्याज्यो विरोधित्वात् ॥ १९७ ॥ एभिरौदयिकादिभिर्भावैः, आत्मा जीवः, स्थानं, गतिः, इन्द्रियाणि, संपदः, सुखं, दुःखं, एतानि सम्प्राप्नोति । स्थीयते यत्र संसारे जघन्यादिस्थितिः स्थानमात्मनः स चात्मा समासेनाष्टविकल्पः ज्ञातव्यः ॥ १९८ ॥ द्रव्यात्मा, कषायात्मा, योगात्मा, उपयोगात्मा, ज्ञानात्मा, दर्शनात्मा, चारित्रात्मा, वीर्यात्मा, मार्गणा परीक्षा चेति ॥ १९९ ॥ साम्प्रतमेषां स्वरूपं प्रतिपादयति—जीवानामेकाक्षादीनां सर्वेषां जीवत्वान्वयात्, अजीवानां धर्मास्तिकायादीनामजीवत्वान्वयवशात् द्रव्यात्मा स्यादिति १ । कषायाः सन्ति येषां ते कषायिणः समोहास्तेषां सकषायिणां कषायैः सहैकत्वापत्तेः कषायात्मा २ । योगा मनोवाक्कायव्यापारास्तदेकत्वपरिणत आत्मा स योगात्मा सयोगानां स्यात् ३ । उपयोगो ज्ञानदर्शनव्यापारो ज्ञेयविषयस्तत्परिणत उपयोगात्मा सर्वजीवानां न त्वजीवानाम् ४ ॥ २०० ॥

सम्यग्दर्शनसम्पन्नस्य तत्त्वार्थश्रद्धानभाजो यो ज्ञानपरिणामः स ज्ञानात्मा ५ । चक्षुरादिदर्शनपरिणतानां दर्शनात्मा सर्वजीवानां भवति ६ । प्राणातिपातादिपापस्थानेभ्यो विरतानां तदाकारपरिणतानां चारित्रात्मा ७ । वीर्यं शक्तिः प्रवर्तनं तद्भाजां सर्वेषां संसारिणां वीर्यात्मा ८ ॥ २०१ ॥ एतेऽष्टौ विकल्पाः प्रतिपादितास्तत्र द्रव्यात्मानमाशङ्कते—आत्मेति ज्ञानदर्शनस्वभावश्चेतनः प्रतीतः, सोऽजीवविषयपुद्गलादिषु कथमात्मशब्दप्रवृत्तिरित्यत्रोच्यते—उपचारो व्यवहारः स चाततीत्यात्मा भवति, व्युत्पत्तितः शब्दवाच्यः, सर्वद्रव्यविषयश्चैष न्याय इति नयविशेषेण सामान्यग्राहिणा नयेन, स्वरूपात् पररूपात् ॥ २०२ ॥ संयोगो रूपं अनेकेन भेदेन निर्देशः परीक्षणीयः, स्वतत्त्वं सहजं स्वरूपं, दृष्टमुपलब्धं, लक्षणैश्चिन्हैरनेकभेदं समस्तमात्मनः ॥ २०३ ॥ चित्तं चेयणसन्ना विन्नाणं धारणा य बुद्धि य । ईहा मई विभक्का जीवस्स उ लक्खणा एए ॥ १ ॥ उत्पत्तिविपत्तिस्थिरतालक्षणं यत्सर्वमपि तदस्ति अंगुलीवत् । एवं यन्नास्ति तदुत्पादादित्रयवन्न भवति खरशृङ्गवत् । अर्पितं विशेषितं जिनप्रवचनमुत्पन्नं । अनर्पितमविशेषितं प्राकृतजनप्रणीतं, अतीतं सप्तविकल्पवचनम् ॥ २०४ ॥ कुशूलाद्यवयवावस्थायां घटाद्यभावः । घटोऽयमुत्पन्न इति तेनाकारेण तस्य घटस्य ॥ २०५ ॥ चशब्दादतीते यस्य पदार्थस्य तेन पदार्थेन ॥ २०६ ॥ पञ्चाजीवद्रव्याणि रूपरसगन्धस्पर्शवन्ति ॥ २०७ ॥ न हि द्रव्यप्रदेशाः सन्ति, अन्ये च वर्णादयः, किं तु तमेव प्रदेशं वर्णादिपुद्गलाः सन्निहिताः स्युः ॥ २०८ ॥ अनादिपारिणामिकं पुद्गलद्रव्यं सर्वभावेषु औपशमिकादिषु वर्तन्ते ॥ २०९ ॥ विधृतपादस्थानस्थितो विधृतपादभ्राम्यमाणनराकार इति २१० तत्र लोके । अवाङ्मुखशरावाकारमधोलोकं ऊर्ध्वलोकं शरावसंपुटाकारम् ॥ २११ ॥ जम्बूद्वीपादिभेदेन वैमानिकदेवलोकाः १०, ग्रैवेयकाः ३, अनुत्तराः १, सिद्धिः १५ ॥ २१२ ॥ अवशेषं समस्तलोकासंख्येयभागादिकं । एको जीवः पृथिव्यादिको व्याप्नोति । वाशब्दात्समस्तलोकं । केवली समुद्घातगः केवली ॥ २१३ ॥ धर्मास्तिकायादयस्त्रयोऽप्यसंख्येयप्रदेशाः । जीवद्रव्यमनन्तसमयं कर्तृपर्यायशून्यानि ॥ २१४ ॥ गतिनिमित्तं स्थित्युपकारी ॥ २१५ ॥ सूक्ष्मता परिणामः स्कन्धानामेव तत्सद्भावेन ते इन्द्रियग्राह्याः साक्षात्, भेदो द्व्यादिस्कंधानां पृथग्भवनं । स्पर्शादयः पुद्गलद्रव्यस्योपकाराः । शब्दपरिणामः पुद्गलद्रव्याणामुपकारः कर्मपुद्गलानां बन्धः क्षीरनीरवत्, इन्द्रधनुरादिः ॥ २१६ ॥ विचेष्टितानि विविधव्यापारोत्क्षेपणाकुञ्चनादय उपग्रहः सौभाग्यादृष्यीकरणादिः जीवितदं क्षीरघृतादि मरणदं, विषास्त्रादि, संसारि जीवविषयाः ॥ २१७ ॥ परिणमनं परिणामः । यथा वर्धतेऽङ्कुरो हीयते वा इत्यादिकालजनित उपकारः । इदं वर्तते इदं न वर्तते वर्तनायाः, परत्वमपरत्वं कालकृतं । पञ्चाशद्वर्षात्पञ्चविंशतिवर्षोऽपरः, पञ्चवर्षाद्दशवर्षः परः । शिक्षा लिप्यादिग्रहणासेवनादिर्वा ॥ २१८ ॥ द्विचत्वारिंशत्प्रकृतयः पुण्यं, द्व्यशीतिः पापम् ॥ २१९ ॥ आगमपूर्वो मनोवाक्कायव्यापारः तस्य योगस्य विपरीतता गुप्तिर्गोपनं स्थगितास्रवद्वारः ॥ २२० ॥ संवृतात्मनस्तपसा

पूर्वार्जितस्य कर्मणः क्षयः । उपधान योगोद्वहनादि तेन नव्यकर्मप्रवेशाभावः ॥ २२१ ॥ जीवादिषु निश्चयेन परिणामः सद्भूतमिति ॥ २२२ ॥ शिक्षा जिनोदितक्रियाफलापाभ्यासः पुनः पुनः ॥ २२३ ॥ एतद्द्विप्रकारं विस्तराधिगमो विस्तरपरिच्छेदः विपरीतार्थग्राही प्रत्ययो विपर्ययः, समासतो द्वेधा ॥ २२४ ॥ आभिनिबोधिकं मतिज्ञानम् ॥ २२५ ॥

ज्ञानानां क्रमेणाष्टाविंशतिचतुर्दशषड्द्विभेदा उत्तराः । विषयो गोचरो मतिश्रुतयोः सामान्यतः सर्वद्रव्येषु-सर्वपर्यायेषु । अवधिरूपिषु । मनःपर्याय मनोगतद्रव्येषु । केवल तु सर्वद्रव्यसर्वपर्यायेषु । आदिशब्दात्क्षेत्रकाला-दिपरिग्रहः । एकस्मिन् जीवे युगपदेकादीनि कियन्ति भाव्यानि भजनीयानि । चत्वारि यावत्केवलावाप्तावपरज्ञाना-भावः ॥ २२६ ॥ मतिश्रुतावधयः ॥ २२७ ॥ समो रागद्वेषविकलस्तस्य आयो लाभस्तत्र भव सामायिकं । प्राक्तन-पर्यायच्छेद, उत्तरपर्यायस्थापनं । परिहरणं परिहारस्तेन विशुद्ध । सूक्ष्मोऽत्यन्तकिट्टीकृतः सपरायो लोभकषायः सूक्ष्म-सपरायगुणस्थानवर्तिनः अकषाय यथाख्यातम् ॥ २२८ ॥ अनेकैर्बहुप्रकारैः अनुयोगैः किं कतिविध कस्येत्यादिभिः प्रमाणैः प्रत्यक्षादिभिः समनुगम्य ज्ञेयम् ॥ २२९ ॥ एकतरस्याः सम्यग्दर्शनादिसंपद. अभावेऽपि । अपिः पूरणे । मोक्षमार्गोऽपि मुक्तिप्रापकोऽपि न सिद्धिकरः त्रिफलाव्यपदेशवत् ॥ २३० ॥ चारित्रंदर्शनज्ञानलाभे, चारित्रलाभे ॥ २३१ ॥ धर्मो दशविधः आवश्यकानि प्रतिक्रमणालोचनादीनि ॥ २३२ ॥ सम्यक्त्वादीना जघन्याद्याराधनानाम् ॥ २३३ ॥ सम्यक्त्वादिसपदां तत्परेण व्यग्रेण । तेष्वेव सम्यक्त्वादिषु । तत्परेषु साधुषु जिनेषु भक्तिरान्तरा प्रीतिः । उपग्रहस्तदुचितान्नपानशयनासनादिप्रदानरूपः समाधिः स्वास्थ्य स्वपरयोः एतेषा करणेन ॥ २३४ ॥ यत्नमेव प्रपञ्च-यति—गुणाना ज्ञानादीनां परतप्तिषु अधृष्यस्याधर्षणीयस्य । मत्सरश्चित्तस्य एव कोपः ॥ २३५ ॥ प्रशम एव निराबाधसुखं सदाचारे रतस्य साधोरिति । तस्य किं साधर्म्यं सुरासुरनरलोकेऽस्मिन् ॥ २३६ ॥ न केनापि व्यय प्रापितं बाधितम् ॥ २३७ ॥ विनिवृत्ता परस्मिन्नाशा येषाम् ॥ २३८ ॥ शब्दादीना विषयाणा परिणाममन्यथा-भवनरूप दुःखहेतुमेव च सप्रधार्य संसारे दुःखान्येव रागद्वेषात्मकानि ॥ २३९ ॥ प्रदोष प्रद्वेषं अव्यथितोऽपी-डितः ॥ २४० ॥ मौनी निरवद्यभाषी, एकाकी निष्कलहो वा, वशे स्थापितानि, परीषहाः सम्यक् सह्यन्ते, कषायाणामुदयो निरुद्धः ॥ २४१ ॥ शब्दादिसंगे निःस्पृहः, प्रशमगुणाः स्वाध्यायादयः तेषा समूहस्तेन विभू-षितोऽभिभवति देवमनुष्यादीना च ॥ २४२ ॥ विरतिः पापविरमण, ध्यान धर्मध्यानादि भावना अनित्याद्याद्याः योगा आवश्यकादिव्यापाराः, सुखेन ॥ ५४४ ॥ धर्मात् "खतीयमज्ज १०" । भूम्यादिजीवा नव अजीवा १० । करणकारणानुमतित्रयम् । मनोवचनकायत्रयम् ॥ २४५ ॥ ससारभीरुसुखप्राप्यपारस्य प्राप्तः विरक्ताया (क्षतताया) दूरानुयायिन तत्कालावस्थायामुचितं प्रकृष्टम् ॥ २४६ ॥ धर्मध्यानस्य भेदचतुष्टयमाह—सबुद्धिसंपर्कमाप्य ॥ २४७ ॥ वीतरागवचन चाज्ञायाः सर्वज्ञदत्तायाः गवेषण तस्या अर्थनिश्चयः । एभिर्हेतुभिरैहलौकिकोऽपायः पारलौकिको नरकतिर्यग्गतिभ्रमणरूपो धर्मार्थिना चिन्त्यते सोऽपायविचयः ॥ २४८ ॥ अशुभकर्मणा द्व्यशीतिविधाना, शुभ-कर्मणा द्विचत्वारिंशद्भेदाना विपाको रसः कटुकमधुरत्वादिस्तस्यानुचिन्तनार्थः, द्रव्याणां षण्णा, क्षेत्रमूर्ध्वाध-स्तिर्यग्भेदं तेषामाकारानुचिन्तनमनुगमन चिन्तनम् ॥ २४९ ॥ नित्योद्विग्नस्य संसारोपरि नित्यमुद्वेग कुर्वत. जित-कोपाहंकारस्य, कलिमल पाप जितसर्वलोभस्य ॥ २५१ ॥ विविक्तौ पृथग्भूतौ बन्धुजनशत्रुवर्गौ यस्य, समस्तुल्यो वासीचन्दनाभ्या कल्पनप्रदेहादिः च्छेदनानुलेपनादिः यस्य स तथैवंविधो देहो यस्य ॥ २५२ ॥ क्रान्तस्माभिरतः स्वकार्य एव व्याप्रियते, न बहिः प्रीतिं विदधाति, दृढमप्रमत्तस्य ॥ २५३ ॥ चित्तनैर्मल्यात् प्रमाददंडयोगैर्विशु-द्ध्यमानस्य विमुच्यमानस्य अग्र्या प्रधानभूताम् ॥ २५४ ॥ प्राक्तनकर्मक्षयकरणदक्षं, अथानन्तर घातिकर्मणा चतुर्णां क्षयैकदेशोऽसमस्तक्षयस्तद्युक्तं, ऋद्धय आमर्षौषध्यादयः, प्रवेका अवधिज्ञानादिविशेषाः, विभवास्तृणाग्रादपि कनक-वृष्टिकर्तृत्वादयः ते विद्यन्ते यत्र तत्तथा, जात भद्र कल्याणमस्य तस्य ॥ २५५ ॥

सुखविभूतिरसामृतकल्पाहारेषु अगुरुर्गौरवरहित अकृतादर इत्यर्थः । लब्धिमाकाशगमनादिका दुष्प्रापां कापुरुषैः, तस्यामामर्षौषध्यादिविभूतौ प्राप्तायामपि ॥ २५६ ॥ सर्वसुखर्द्धिश्चतुर्विधेन्द्रविभूतिः ॥ २५७ ॥ तज्जयं

तपोऽनुष्ठानजन्यातुल्यविभूतिबन्धाभिभव, यथा तीर्थकरतत्स्थानक प्राप्तस्तथाऽसावपि भवति ॥ २५८ ॥ पृथक्त्ववितर्कसविचार १ एकत्ववितर्कमविचारं २ कर्माष्टकमध्ये स्वामिनम् ॥ २५९ ॥ अथ क्षपकश्रेणिमारोहन् मोहमुन्मूलयन् प्रथम अनन्तानुबन्धिना यावज्जीवावस्थायिकषायाणा, ततो मिथ्यात्वमोह एव गहन, ततोऽपि मिश्र सम्यक्त्व च मिथ्यात्वं च सम्यग्मिथ्यात्वं, एतावता मिश्रम् ॥ २६० ॥ सम्यक्त्व क्षायोपशमिकपुञ्जरूपं, ततो द्वितीयतृतीयकषायान् ॥ २६१ ॥ हास्यरतीत्यादि उन्मूलनेऽ ( लिते ) ष्टाविंशतिविधेऽपि मोहे वीतरागो भवति ॥ २६२ ॥ सकल उद्घातितो ध्वस्तो मोहो येन सः, अनुपलक्ष्यो नाद्यापि स्वविषया प्रतीतिमुत्पादयितु प्रत्यलः, यथा राहुणा पूर्णचन्द्रो मुक्तोऽपि कियन्त कालमनुपलक्ष्यो भवति, तथा क्षीणमोह इति ॥ २६३ ॥ यथा ज्वालिताग्निः काष्ठादि., एव ध्यानाग्निः। अनन्तगुणं तेजो यस्य । तपोऽनशनादि । त एव हविर्घृतम् ॥ २६४ ॥ अनुप्राप्तः परिगतः, जीवानां सर्वेषा कर्ममाजा दहेत्, यदि संक्रमः स्यात् ॥ २६५॥ संक्रमः सामस्त्येन कर्मप्रवेश., अथ विभाग एकदेशोऽपि नाक्रामति ॥ २६६ ॥ शिरउद्गताया नाड्यास्क्षयात् वृक्षस्य ध्रुवो निश्चयेन भवति ॥ २६७ ॥ क्षपितकषायत्वात्, अन्तर्मुहूर्तकाल यावद्भूत्वा स्थित्वा, युगपदेककाल ज्ञानावरण ५ दर्शनावरण ४ अन्तरायाणा ५ क्षयमाप्य ॥ २६८ ॥ शाश्वतमनवरतमवनशीलत्वात्, अनन्त क्षयाभावात्, केनापि तस्यातिशयितुमशक्यत्वात्, अनुपममपगतोमानत्वात् अनुत्तरमविद्यमानोत्तरत्वात् निरवशेष परिपूर्णत्वेनोत्पत्तेः, सपूर्ण सकलज्ञेयग्राहित्वात्, अप्रतिहतं सदापि प्रतिघातकाभावात् ॥ २६९ ॥ कार्त्स्न्येपरिपूर्णे लोकालोके कृत्स्नवस्तुपरिच्छेदित्वात्, गुणपर्यायवद्द्रव्य, सहभाविनो गुणाः, क्रमभाविन. पर्यायाः सर्वार्थे सर्वप्रकारैः ॥ २७० ॥ क्षीणघातिकर्मचतुष्कः भवोपग्राहिकर्मचतुष्कः वेदिता जघन्येन घटिकाद्वयम् ॥ २७१ ॥ तेनायुषाऽभिन्न सदृश क्षीरोदकवत् संस्थितचरमभवयोग्यमायुः केवलिना दुर्भेदमनपवर्तनीयत्वात्, तथा वेदनीयं कर्म, तदुपग्रहं तेनायुषोपगृह्यते उपष्टभ्यते तदुपग्रहमनपवर्तनीयत्वात्, आयुःकर्मणा सह वेद्यत्वात् ॥ २७२ ॥ अधिकतरम् ॥ २७३ ॥ दण्डमूर्ध्वाधश्चतुर्दशरज्ज्वात्मक बाहल्यतः शरीरमान कपाट पूर्वापरलोकान्तव्यापिन समस्तनिष्कूटव्यापनाल्लोकव्यापी ॥ २७४ ॥ अन्तराणि निष्कूटगतजीवप्रदेशान् ॥२७५॥ औदारिकशरीरयापक प्रथमाष्टमसमययोर्दण्डकरणसंहारलक्षणयो. कथितोऽसौ केवली ॥ २७६ ॥ स केवली करणत्रयशुद्धयोगवान् उचितं सत्यं यतियोग्य योग व्यापार युक्त प्रवर्तयति, सयोगो मोक्ष न गच्छतीति योगनिरोधमुपैति प्राप्नोति ॥ २७७ ॥ तत्र प्रथमं मनोयोगं मनःपर्याप्तिजनितव्यापार शरीरप्रतिबद्ध मनोद्रव्यग्राहक, तद्वियोजनार्थं पञ्चेन्द्रियस्य सञ्ज्ञिनो मनःपर्याप्त्या प्रथमसमयपर्याप्तकस्य यः सर्वजघन्यमनोयोगो मनोवर्गणाग्रहणशक्तेर्व्यापारः तस्मात्स्वात्मनि असख्येयगुणहान्या प्रतिसमय निरुन्धन् सकल निरुणद्धि, मन.पर्याप्त्या रहितो भवति ॥ २७८ ॥ द्वीन्द्रियः कपर्दिकादिजीवः साधारणः सूक्ष्मनिगोदादिस्तयोः क्रमेण वाक्पर्याप्तिकायपर्याप्तिभ्यां प्रथमसमयपर्याप्तकयोर्जघन्ययोगौ क्रमेण वागुच्छ्वासरूपौ ताभ्यामसख्येयगुणहीनौ निरुणद्धि । सूक्ष्मकाययोगनिरोधे तु पनक उल्लिजीवस्तस्मादधोऽसंख्यगुणहीनः पर्याप्तिद्वयरहितो भवति ॥ २७९ ॥ सूक्ष्मकाययोगनिरोधकाले तृतीयशुक्लध्यानी भवति इति तन्निरूपयन्नाह—सूक्ष्मक्रियमप्रतिपातिक ध्यायति । तदैव च शैलेशीं करोति स्वदेहत्रिभागहीनात्मप्रदेशाघनीभवति, ततः परेण शेषकालेन निरुद्धसकलयोगः व्युपरतसकलक्रियमनिवृत्ति ध्यान ध्यायन् चरमकर्मांश क्षपयति ॥ २८० ॥ चरमभवेऽन्तिममनुष्यजन्मनि, सस्थान देहोच्छ्रायप्रमाण, यस्य सिद्धिमुपजिगमिषोः तस्मात्त्रिभागहीनं तृतीयांशेन न्यून, सस्थानावगाहनापरिमाण करोति ॥ २८१ ॥ स भगवान् केवली, तस्यां शैलेश्यवस्थाया, मनोवागुच्छ्वासकाययोगक्रियार्थविनिवृत्तः निरुद्धसकलयोगक्रियः, अपरिमितनिर्जरः बहुकर्मक्षपणयुक्त आत्मा यस्य सः, ससारमहासमुद्रादुत्तीर्णः पारप्राप्त एव तिष्ठति ॥ २८२ ॥ ईषत् ह्रस्वानां मनाग् ह्रस्वाक्षराणा पञ्चको ' अइउऋऌ ' रूपः तस्योद्गीर्णे प्रोच्चारणं तावन्मात्राया परिमाणतस्तत्तुल्यकालीया शैलेशी एति गच्छति सयमवीर्याप्तवलः सर्वसंवरवीर्येण प्राप्तबलः, विगताऽपगता लेश्या भावरूपा यस्य स. ॥ २८३ ॥ पूर्वरचितं प्रथममेव समुद्घातावसरेऽवस्थापित प्रकृतिशेष

गोत्रवेद्यायुषो यदवशिष्टमास्ते, तत्प्रकृतिशेषं सयमश्रेण्या अन्तर्मुहूर्तगतसमयप्रमाणाया संस्थाप्य, समये समये क्षपयन्, असख्यातगुणमुत्तरोत्तरेषु समयेषु ॥ २८४ ॥ चरमकर्मांशानुत्तरप्रकृतीः त्रयोदशसंख्याः विनिहत्यापनीय युगपदेककालम् ॥ २८५ ॥ सर्वगतियोग्यसंसारमूलहेतूनि, सर्वत्र भवनशीलानि, औदारिकादिशरीराणां यत्स्वरूपं तेन सर्वेण रहितः ॥ २८६ ॥ अवक्रश्रेणिगतिं, अविद्यमानस्पर्शां, अवक्रगत्या अप्रतिहतगतिः ॥ २८७ ॥ ज्ञानोपयोगेन वर्तमानः ततः परमुपयोगद्वय सिद्धानामिति ॥ २८८ ॥ सादिकं यस्मिन् सिद्धोऽजनि तमादिं कृत्वा, अनन्तं पुनः क्षयाभावात्, व्याबाधारहितं, केवलान्यद्वितीयानि क्षायिकानि, मुक्तः कृत्स्नकर्मक्षयात् ॥ २८९ ॥ मुक्तः सन् जीवोऽभावोऽसद्रूपः स्वलक्षणस्य ज्ञानदर्शनादेर्भावात्, स्वतोऽर्थसिद्धेः, यद्यपि छाद्मस्थिकोपयोगात्कैवल्योपयोगान्तरमुदेति, तथाप्युपयोगसाम्यान्न भिद्यते ज्ञानस्वभावत्वात्, भावान्तरसंक्रान्तेः जलस्थितलवणस्य रूपतोऽदर्शनेऽपि रसत उपलब्धिवत् ॥ २९० ॥ इहैव संसारे स न तिष्ठति, अनिबन्धात् मनुजादिभवकारणानामत्यन्तलयात्, अनाश्रयात् मुक्तस्य हि मनुजभवोऽनाश्रयः, किं तु सिद्धिरेव, संसारव्यापाराभावात् शरीरादिकारणाभावाच्च ॥ २९१ ॥ अधो न याति गुरुत्वाभावात् । अशक्योऽय भावो यत्कर्ममुक्तोऽधो यति । लोकान्तादपि परतो न याति मुक्तः, उपग्रहकारिधर्मद्रव्याभावात् । प्लवकस्तारकः यानपात्रं यथा स्थले न याति उपग्रहाभावात् ॥ २९२ ॥ योगो मनःप्रभृतिकः, प्रयोग आत्मनः क्रिया, तयोरभावान्न तिर्यग्गतिरस्ति । तथा सिद्धस्य मुक्तस्योर्ध्वमेव गतिर्भवति कियद्यावदालोकान्तम् ॥ २९३ ॥ कुम्भकारप्रभ्रामितचक्रस्य तद्व्यापाराभावेऽपि भ्रमणवत्, एरण्डफलवत्, अलाबुवत्, परमहंसवत्, ज्वलनधूमवत्, तृतीये शुक्लध्याने सूक्ष्मक्रियया प्रयोगेण ॥ २९४ ॥ घटमानः प्रवचनोक्तसकलक्रियासु प्रयत्नेन चेष्टतेऽहर्निशं क्रियासु ॥ २९६ ॥ वीर्यसंपत्साहससमृद्धिः । एतेषां संहननादीनां वैकल्यात् । कर्मणा निकाचनावस्थाप्राप्तिः । कर्मक्षयमकृत्वाऽविधाय उपरमं विनाशमेति गच्छति ॥ २९७ ॥ नवसु ग्रैवेयकेषु । 'अर्ह मह पूजायां' इति धातोर्महान्ति पूज्यानि ऋद्धिद्युतिवपूंषि यस्य ॥ २९८ ॥ विशिष्टान्वयेषु बहुपुरुषेषु गुणवत्सु सम्यक्त्वादिगुणयुतेषु ॥ २९९ ॥ उत्पत्तिमात्मलाभं प्राप्य । कुलमुग्रादि । बन्धुः पित्रादिवंशः । विभवो धनादिः । रूपं सुन्दराकारादि समतास्वभावं । बलं प्राणं । बुद्धिरौत्पत्तिक्यादिका । ताभि. संपन्नः ॥ ३०० ॥

भावितोऽन्तरात्मा मनो यस्य सः । ततः पर मनुष्यलोकात् स्वर्गान्तरितः ॥ ३०१ ॥ इह मनुष्यलोके जिनागमे मनुष्यः श्रावकः निश्चयेन कृतनिश्चयः । अतिशयजाताभिधेय., दर्शनं सम्यक्त्व शीलमुत्तरगुणाः, व्रतानि प्राणातिपातादिनिवृत्तिरूपाणुव्रतानि, भावना अनित्यभावनादिका द्वादश, एभी रजित वासित मनो यस्य सः ॥३०२॥ स्थूला बादराः प्राणिनः तेभ्यो विरतिस्तेषामवधः, न पृथिव्यादिस्थावरेभ्यः । कन्यादिविषयमनृतमन्यथाभाषण । बृहच्चौर्यं यस्मिन् हृते चौर इति व्यपदिश्यते । परपरिगृहीतस्त्रीगमन । रतिर्विषयादिषु प्रीति , अरतिर्व्रतादिषूद्वेगः, ताभ्यां सदा वर्जितः । दिग्व्रतं षट्सु दिक्षु गमनपरिमाणं देशावकाशिक प्रतिदिनगमनादेर्मर्यादाकरणं । अनर्थदंडः शरीरादीनां प्रयोजन विना पापोपदेशादि ॥३०३॥ सामायिक द्विविधं त्रिविधेन योगेन सावद्ययोगप्रत्याख्यानं प्रतिक्रमणं च । पौषध सत्याहारशरीरसत्कारब्रह्मचर्याव्यापाररूपचतुर्विधोऽष्टम्यादिषु विशेषेण तं करोति । उपभोगोऽन्नपानपुष्पधूपस्नानागरागादिः । परिभोगो वस्त्रालंकारांगनाशयनासनसदनादिस्तयो परिमाण, यत्र व्रते कृत्वा विधाय न्यायागतमर्गार्हितव्यवहारेणोपात्त साधूना देयवस्तु कल्प्य साधूनामनुद्दिश्य कृतं । विधिनेति निष्पन्नपाकः सर्वोऽपि सत्कारपूर्वकम् ॥ ३०४ ॥ चैत्यानि जिनबिंबानि, आयतनानि तेषामेवागाराणि, प्रस्थापना तेषामेव प्रकृष्टमहाविभूत्या वादित्रगीतनृत्यतालानुचरस्वजनपरिवारादिकया प्रतिष्ठा । एतानि कृत्वा विधाय शक्तितः स्वसामर्थ्यानुसारेण प्रवचनप्रोद्भावना स्याच्चया पूजा सपर्या ॥ ३०५ ॥ प्रशमे कषायादिजये रति. प्रीतिस्तस्या नित्यं सदाकाल तृषितः साभिलाषः । जिनेऽर्हत्सु, गुरुष्वाचार्यादिषु, सत्साधुषु, वन्दनाभिरतो नमस्कारेण प्रीतः । काले स्वायुश्छेदासन्ने । सलेखना कषायाद्यल्पीकृततनः क्रियां । योगेन शुभध्यानेन सुविशुद्धामाराधनाभिमुखीकृत्य ॥ ३०६ ॥ प्राप्तो लब्धं कल्पेषु अधिपतित्वं वा सामानि-

क्त्वमन्यद्वा सामान्यदेवत्वं विमानवासविशिष्टमवाप्य तत्र स्थानानुरूप सुखम् ॥ ३०७ ॥ अर्यदेशजातिकुलविभव-रूपसौभग्यादिका सम्यक्त्वादिगुणसंपद च ॥ ३०८ ॥ मनुष्येपु ॥ ३०९ ॥ कविरात्मन औद्धत्य परिहरति–धर्म-कथिका द्विविधधर्मप्रतिपादिका इमा प्रशमरतिं रत्नाकरादिव जीर्णकपर्दिकामिव 'प्रशमप्रीत्या ॥ ३१० ॥ सर्वात्म-नाऽशेषप्रकारै. सततमनवरत, यत्नः कार्यः ॥३११॥ इह प्रशमरतिप्रकरणेऽसमनसमसंगत, छन्दो रचनाविशेषः, शब्दः सस्कृतादिभेदभिन्नः, समय. सिद्धान्तः, तस्यार्थोऽभिधेय मर्षयितव्य क्षन्तव्यम् ॥ ३१२ ॥ ऐहिकामुष्मिकसुखमूलकारण सर्वभावाना विनिश्चयो निर्णयस्तस्य प्रकटनकर क्षान्त्यादिरुवर्गुणसिद्धिसाधने धनमिव जयमनुभवति ॥ ३१३ ॥

# परिशिष्ट

## २–प्रशमरतिप्रकरणकी कारिकाओंकी अनुक्रमणिका।

# प्रशमरतिप्रकरणम्



## परिशिष्ट ३ संस्कृत टीकामें उद्धृत पद्योंकी अनुक्रमणिका ।